# ॥ परब्रह्मोपनिषत् ॥

परब्रह्मोपनिषदि वेद्याखण्डसुखाकृति ।
परिव्राजकहृद्गेयं परितस्त्रैपदं भजे ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः ॥ व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ अथ हैनं महाशालः शौनकोऽङ्गिरसं भगवन्तं पिप्पलादं विधिवदुपसन्नः पप्रच्छ दिव्ये ब्रह्मपुरे के सम्प्रतिष्ठिता भवन्ति । कथं सृज्यन्ते । नित्यात्मन एष महिमा । विभज्य एष महिमा विभुः । क एषः । तस्मै स होवाच । एतत्सत्यं यत्प्रब्रवीमि ब्रह्मविद्यां वरिष्ठां देवेभ्यः प्राणेभ्यः । परब्रह्मपुरे विरजं निष्कलं शुभमक्षरं विरजं विभाति । स नियच्छति मधुकरः श्येव विकर्मकः । अकर्मा स्वामीव स्थितः । कर्मतरः कर्षकवत्फलमनुभवति । कर्ममर्मज्ञाता कर्म करोति । कर्ममर्म ज्ञात्वा कर्म कुर्यात् । को जालं विक्षिपेदेको नैनमपकर्षत्यपकर्षति । प्राणदेवाश्चत्वारः । ताः सर्वा नाड्यः सुषुप्तश्येनाकाशवत् । यथा श्येनः खमाश्रित्य याति स्वमालयं कुलायम् । एवं सुषुप्तं ब्रूत । अयं च परश्च स सर्वत्र हिरण्मये परे कोशे । अमृता ह्येषा नाडी त्रयं संचरति । तस्य त्रिपादं ब्रह्म । एषात्रेष्य ततोऽनुतिष्ठति । अन्यत्र ब्रूत । अयं च परं च सर्वत्र हिरण्मये कोशे ।
यथैष देवदत्तो यष्ट्या च ताड्यमानो नैवैति ।

एवमिष्टापूर्तकर्मशुभाशुभैर्न लिप्यते । यथा
कुमारको निष्काम आनन्दमभियाति । तथैष देवः
स्वप्न आनन्दमभियाति वेद एव परं ज्योतिः । ज्योतिषामा
ज्योतिरानन्दयत्येवमेव । तत्परं यच्चित्तं परमात्मान-
मानन्दयति । शुभ्रवर्णमाजायतेश्वरात् । भूयस्तेनैव
मार्गेण स्वप्नस्थानं नियच्छति । जलूकाभाववद्यथा-
काममाजायतेश्वरात् । तावतात्मानमानन्दयति । परसन्धि
यदपरसन्धीति । तत्परं नापरं त्यजति । तदैव कपालष्टकं
सन्धाय य एष स्तन इवावलम्बते सेन्द्रयोनिः स वेदयोनिरिति ।
अत्र जाग्रति । शुभाशुभातिरिक्तः शुभाशुभैरपि कर्मभिर्न लिप्यते ।
य एष देवोऽन्यदेवास्य सम्प्रसादोऽन्तर्याम्यसङ्गचिद्रूपः
पुरुषः । प्रणवहंसः परं ब्रह्म । न प्राणहंसः । प्रणवो
जीवः । आद्या देवता निवेदयति । य एवं वेद । तत्कथं निवेदयते ।
जीवस्य ब्रह्मत्वमापादयति । सत्त्वमथास्य पुरुषस्यान्तः
शिखोपवीतत्वं ब्राह्मणस्य । मुमुक्षोरन्तः शिखोपवीतधारणम् ।
बहिर्लक्ष्यमाणशिखायज्ञोपवीतधारणं कर्मिणो गृहस्थस्य ।
अन्तरुपवीतलक्षणं तु बहिस्तन्तुवदव्यक्तमन्तस्तत्त्वमेलनम् ।
न सन्नासन्न सदसद्भिन्नाभिन्नं न चोभयम् । न सभागं
न निर्भागं न चाप्युभयरूपकम् ॥

ब्रह्मात्मैकत्वविज्ञानं हेयं मिथ्यत्वकारणादिति ।
पञ्चपाद्ब्रह्मणो न किंचन । चतुष्पादन्तर्वर्तिनोऽन्त-
र्जीवब्रह्मणश्चत्वारि स्थानानि । नाभिहृदयकण्ठमूर्धसु
जाग्रत्स्वप्नसुषुप्तितुरीयावस्थाः । आहवनीयगार्हपत्य-
दक्षिणसभ्याग्निषु । जागरिते ब्रह्मा स्वप्ने विष्णुः
सुषुप्तौ रुद्रस्तुरीयमक्षरं चिन्मयम् । तस्माच्चतुरवस्था ।
चतुरङ्गुलवेष्टनमिव षण्णवतितत्त्वानि तन्तुवद्विभज्य तदा
हितं त्रिगुणीकृत्य द्वात्रिंशत्तत्त्वनिष्कर्षमापाद्य
ज्ञानपूतं त्रिगुणस्वरूपं त्रिमूर्तित्वं पृथग्विज्ञाय

नवब्रह्माख्यनवगुणोपेतं ज्ञात्वा नवमानमितस्त्रिगुणीकृत्य
सूर्येन्द्वग्निकलास्वरूपत्वेनैकीकृत्याद्यन्तरेकत्वमपि मध्ये
त्रिरावृत्य ब्रह्मविष्णुमहेश्वरत्वमनुसंधायाद्यन्तमेकीकृत्य
चिद्ग्रन्थावद्वैतग्रन्थिं कृत्वा नाभ्यादिब्रह्मबिलप्रमाणं
पृथक् पृथक् सप्तविंशतितत्त्वसंबन्धं त्रिगुणोपेतं
त्रिमूर्तिलक्षणलक्षितमप्येकत्वमापाद्य वामांसादिदक्षिणकण्ठ्यन्तं
विभाव्याद्यन्तग्रहसंमेलनमेकं ज्ञात्वा मूलमेकं सत्यं
मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ।
हंसेति वर्णद्वयेनान्तः शिखोपवीतित्वं निश्चित्य ब्राह्मणत्वं ब्रह्मध्यानार्हत्वं
यतित्वमलक्षितान्तःशिखोपवीतित्वमेवं बहिर्लक्षितकर्मशिखा ज्ञानोपवीतं
गृहस्थस्याभासब्रह्मणत्वस्य केशसमूहशिखाप्रत्यक्षकार्पासतन्तु-
कृतोपवीतत्वं चतुर्गुणीकृत्य चतुर्विंशतितत्त्वापादनतन्तुकृत्वं
नवतत्त्वमेकमेव ॥ परंब्रह्म तत्प्रतिसरयोग्यत्वाद्बहुमार्गप्रवृत्तिं
कल्पयन्ति । सर्वेषां ब्रह्मादीनां देवर्षीणां मनुष्याणां मूर्तिरेका ।
ब्रह्मैकमेव । ब्राह्मणत्वमेकमेव । वर्णाश्रमाचारविशेषाः पृथक्पृथक्
शिखावर्णाश्रमिणामेककैव । अपवर्गस्य यतेः शिखायज्ञोपवीतमूलं
प्रणवमेकमेव वदन्ति । हंसः शिखा । प्रणव उपवीतम् । नादः संधानम् ।
एष धर्मो नेतरो धर्मः । तत्कथमिति । प्रणवहंसो नादस्त्रिवृत्सूत्रं
स्वहृदि चैतन्ये तिष्ठति त्रिविधं ब्रह्म । तद्विद्धि प्रापञ्चिकशिखोपवीतं त्यजेत् ।
सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।
यदक्षरं परंब्रह्म तत्सूत्रमिति धारयेत् ॥ १॥

पुनर्जन्मनिवृत्यर्थं मोक्षस्याहर्निशं स्मरेत् ।
सूचनात्सूत्रमित्युक्तं सूत्रं नाम परं पदम् ॥ २॥

तत्सूत्रं विदितं येन स मुमुक्षुः स भिक्षुकः ।
स वेदवित्सदाचारः स विप्रः पङ्क्तिपावनः ॥ ३॥

येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।

तत्सूत्रं धारयेद्योगी योगविद्ब्राह्मणो यतिः ॥ ४॥

बहिःसूत्रं त्यजेद्विप्रो योगविज्ञानतत्परः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स मुक्तिभाक् ॥ ५॥

नाशुचित्वं न चोच्छिष्टं तस्य सूत्रस्य धारणात् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥ ६॥

ये तु सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमीरितम् ॥ ७॥

अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥ ८॥

कर्मण्यधिकृतः ये तु वैदिके लौकिकेऽपि वा ।
ब्राह्मणाभासमात्रेण जीवन्ते कुक्षिपूरकाः ।
व्रजन्ते निरयं ते तु पुनर्जन्मनि जन्मनि ॥ ९॥

वामांसदक्षकण्ठ्यन्तं ब्रह्मसूत्रं तु सव्यतः ।
अन्तर्बहिरिवात्यर्थं तत्त्वतन्तुसमन्वितम् ॥ १०॥

नाभ्यादिब्रह्मरन्ध्रान्तप्रमाणं धारयेत्सुधीः ।
तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तन्तुनिर्मितम् ॥ ११॥

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य नेतरेषां तु किंचन ॥ १२॥

इदं यज्ञोपवीतं तु परमं यत्परायणम् ।

विद्वान्यज्ञोपवीती संधारयेद्यः स मुक्तिभाक् ॥ १३॥

बहिरन्तश्चोपवीती विप्रः संन्यस्तुमर्हति ।
एकयज्ञोपवीती तु नैव संन्यस्तुमर्हति ॥ १४॥

तस्मात्सर्वप्रयत्नेन मोक्षापेक्षी भवेद्यतिः ।
बहिःसूत्रं परित्यज्य स्वान्तःसूत्रं तु धारयेत् ॥ १५॥

बहिःप्रपञ्चशिखोपवीतित्वमनादृत्य प्रणवहंसशिखोपवीतित्वमवलम्ब्य मोक्षसाधनं कुर्यादित्याह भगवाञ्छौनक इत्युपनिषत् ॥

ॐ भद्रं कर्णेभिः शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवा􏰀सस्तनूभिः ॥ व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥

स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति परब्रह्मोपनिषत्समाप्ता॥